

SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:11, Issue: 08
November 2024, Price Rs.20/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

नवम्बर् - २०२४ रू. २०/-

## तिरुचानूरु
## श्रीपद्मावतीदेव्याः ब्रह्मोत्सवः
28.11.2024 आरभ्य 06.12.2024 पर्यन्तम्



तिरुमलश्रीपति सालकट्ल ब्रह्मोत्सवेषु 04-10-2024 तिथौ श्रीवेङ्कटेश्वरस्वामिभ्यः आन्ध्रप्रदेश गौरव मुख्यमन्त्रिवर्यैः नारा चन्द्रबाबुनायुडु महोदयैः धर्मपत्न्या सह समर्पित पट्टुपीताम्बर मनोहरदृश्यम्।



तिरुमल श्रीवेङ्कटेश्वरालये 04.10.2024 तिथौ आन्ध्रप्रदेश गौरवमुख्यमन्त्रि श्रीनाराचन्द्रबाबुनायुडु दम्पत्योः आन्ध्रप्रदेशदेवादायशाखामन्त्रिवर्यैः श्री आनं रामनारायणरेड्डि महोदयैः समर्प्यमाण श्रीवेङ्कटेश्वर चित्रपटमनोहर दृश्यम्। तत्र भागं गृहीतवतां ति.ति.दे. अनुबन्धकार्यनिर्वहणाधिकारिणां श्री सि.हेच्. वेङ्कय्यचौदरि, ऐ.आर्.एस्., महोदयानाम् च मनोहरदृश्यम्।





तिरुमलक्षेत्रे आन्ध्रप्रदेश गौरव मुख्यमन्त्रिवर्यैः नाराचन्द्रबाबुनायुडु महोदयैः 05.10.2024 तिथौ ''वकुळमाता'' नाम्ना प्रारभ्यमान केन्द्रीयपाचकशाला मनोहर दृश्यम्। अस्मिन्नेव कार्यक्रमे भागं गृहीतवतां आन्ध्रप्रदेश देवादायशाखामन्त्रिवर्याणां गौरव श्री आनं रामानारायणरेड्डि अपि च तिरुपति शासनसभ्यनां श्री अरणिश्रीनिवासुलु अपि च ति.ति.दे. उन्नताधिकारिणां मनोहर दृश्यम्।





ति.ति.दे. 04.10.2024 तिथौ आन्ध्रप्रदेश गौरव मुख्यमन्त्रिवर्यैः नारा चन्द्रबाबुनायुडु महोदयैः आविष्कृत नूतन दैनन्दिनग्रन्थः, वार्षिक क्यालेण्डर् प्रदर्शन मनोहरदृश्यम्, अपि च देवादायशाखामन्त्रिवर्याणां गौरव श्री आनं रामानारायणरेड्डि महोदयानां ति.ति.दे. उन्नताधिकारिणां च मनोहर दृश्यम्।





02.10.2024 तिथौ तिरुमल श्रीवेङ्कटेश्वरस्वामिदर्शनानन्तरं मातृश्रीतरिगोण्डवेङ्गमाम्वान्नप्रसाद केन्द्रे भोजनं स्वीकुर्वतां आन्ध्रप्रदेश गौरव उपमुख्यमन्त्रिवर्याणां श्रीकोणिदेल पवनकल्याणानां अपि च तिरुपति शासनसभ्यनां श्री अरणिश्रीनिवासुलुमहोदयानां मनोहरदृश्यम्।



## गीतामृतम्

श्रीभगवानुवाच -

एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि।।

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्।।

(भगवद्गीता २.३९-४०)

श्रीभगवान् उवाच। हे अर्जुन!

भावः - हे अजुन! एतावत्पर्यन्तं तव सांख्यज्ञानं प्रोक्तम्। इतः पश्चात् येन ज्ञानेन संसारबन्धात् विमोक्ष्यसे, तादृशं योगसम्बन्धज्ञानं वक्ष्यामि शृणु।

फलाभिलाषं त्यक्त्वा एतन्निष्कामकर्मयोगं कर्तुं प्रारभ्य समाप्तिपूर्वमेव मध्यकाले विघ्नैः स्तब्धोपि योगः दोषः न स्यात्। एतत् कर्मयोगानुष्ठानं किञ्चिदपि महदेव। यतः इदमनुष्ठानं जननमरणप्रवाहरूपसंसारभयाद्रक्षति। अत्र आत्मशुद्धिरेव प्रधानम्।

## सङ्कीर्तनम्



देवादिकृत पद्मावतीस्तुतिः

पद्मसरस्याविर्भूतायाः श्रीवेङ्कटेशस्य प्रसन्नायाः लक्ष्मीदेव्याः ब्रह्मादिकृतस्तुतिः

१. नमःश्रियै लोकधात्र्यै ब्रह्ममात्रे नमो नमः।
नमस्ते पद्मनेत्रायै पद्ममुख्यै नमो नमः।।

२. प्रसन्नमुखपद्मायै पद्मकान्तयै नमो नमः।
नमो बिल्ववनस्थायै विष्णुपत्न्यै नमो नमः।

३. विचित्र क्षौमधारिण्यै पृथुश्रोण्यै नमो नमः।।
पक्वबिल्वफलापीनतुङ्गस्तन्यै नमो नमः।

४. सुरक्तपद्मपत्राय करपादतले शुभे।
सुरत्नाङ्गकेयूर काञ्चीनूपुरशोभिते।।
यक्षकर्दमसंलिप्त सर्वाङ्गे कटकोज्वले।।

५. माङ्गल्याभरणैश्चित्रैः मुक्ताहारैर्विभूषिते।
ताटङ्कैरवतंसैश्च शोभमानमुखाम्बुजे।।

६. पद्महस्ते नमस्तुभ्यं प्रसीद हरिवल्लभे।
ऋग्यजुस्सामरूपायै विद्यायै ते नमो नमः।।

७. प्रसीदारस्मान् कृपादृष्टिपातैरालोकयाब्धिजे।
ये दृष्टास्ते त्वयाब्रह्मरुद्रैन्दवं समाप्नुयुः।।

(वराहपुराणे - द्वितीयभागे नवमाध्यायाः)

# जगदेकसौभाग्यदायी

## ब्रह्मोत्सव प्रारम्भः

तिरुमलतिरुपतिदेवस्थानयाजमान्येन प्रतिष्ठात्मकतया निर्वाह्यमानोत्सवेषु ब्रह्मोत्सवः एकः तिरुमलक्षेत्रे वेङ्कटपतेः निर्वाह्यमाण पद्धत्यां तिरुपति समीपपद्मावतीदेव्याः अपि तिरुचानूरुपुण्यक्षेत्रे कार्तिकमासे उत्सवः निर्वाह्यते। वैष्णवालये मातुः पद्मावतीदेव्याः तिरुचानूरुक्षेत्रे उत्सवनिर्वाहः बहु विशेषपुण्यप्रयोजनप्रदः। उत्सवनिर्वहणात् अधिष्ठानदेव संतृप्तिः, भेदभावविस्मरणम्। आलयालङ्करणं, वाहनसन्नद्धता, माडवीथीसुन्दरीकरणं, तीर्थजलाशयशुचीकरणं, वयोभेदेन विना गायकनर्तकीमण्यादिभिः उत्सवविग्रहपुरतः स्वकलाप्रदर्शनावसरः, स्थानिकैः बन्धुमित्राह्वानेन सहृदयताभिवृद्धिः, व्याख्यातृभिः आलयसम्बन्धपौराणिक कथांश विवरणात् श्रवणभाग्यमित्यादिप्रयोजनानि, सिद्ध्यन्ति। गजरथवाहनोत्सवः, पद्मसरसि पञ्चमीतीर्थोत्सवः अशेषप्रजाकर्षकः भवति। उत्सवदिने आलयमूर्तिदिव्यस्वरूपदर्शनात् सर्वसौभाग्यानि लभ्यन्ते इति भक्तानां विश्वासः। उत्+सवः उत्सवः बहुफलसाधकयज्ञः। अधिष्ठानदैवसंतृप्त्यर्थं इहपरलोकसम्बन्ध प्रयोजनापेक्षया यथाशास्त्रं क्रियमाणकार्यकलापः। क्रतुषु भागस्वामिनामेव तत्फलं लभ्यते। उत्सवः बहुलार्थसाधकः। रामपट्टाभिषेक प्रयत्ने रामायणेऽपि ''उत्सवश्च महानासीदयोध्यायां जनाकुलः'' इति वाल्मीकिप्रयोगः दृश्यते।उत्सवाः पञ्चमुखैश्वर्यप्रदाः। आध्यात्मिकशक्ति प्रवर्धकाः, परस्परावगाहनप्रयोजकाः, भावितराणां भक्तानां मार्गदर्शकाः भवन्ति। मङ्गलदेवतायाः श्रीमहालक्ष्म्यवतारालमेलुमङ्गाम्बायाः ब्रह्मोत्सवाः अस्मिन् मासे एव प्रारभ्यन्ते। एषु उत्सवेषु भागं गृहीत्वा मातुः पद्मावतीदेव्याः अमूल्याशीः प्राप्नुवन्तु इति आकाङ्क्ष्यते नमश्श्रियै लोकधात्र्यै ब्रह्ममात्रे नमो नमः। नमस्ते पद्मनेत्रायै पद्ममुख्यै नमो नमः।

# नवम्बर् -२०२४

सम्पुटिः-११ सञ्चिका-०८

स्वस्तिश्री चान्द्रमाने श्रीक्रोधिनामसंवत्सर आश्वयुजकृष्ण-अमावास्या शुक्रवारादारभ्य कार्तिककृष्णचतुर्दशी शनिवार पर्यन्तम् - २०२४


| | |
|---|---|
| तिरुचानूरु पद्मसरोवर वैशिष्ट्यम् - डा. एम्. ईश्वरम्मा | 06 |
| नागचविति - डा जि.चन्द्रशेखर् | 08 |
| श्रीशिवपूजाविधानम् - डा सि.रामलक्ष्मी | 11 |
| श्रीशेषाद्रीशस्तुतिः - श्री कन्दाल लक्ष्मीनारायणः | 15 |
| याज्ञवल्क्य जयन्ति - आचार्य जि.पद्मनाभम् | 17 |
| साधुसङ्गमः सकलार्थसाधकः - डा.के.कोटेश्वरय्य | 19 |
| शाप एव वरम् (चित्रकथा) - डा. के. सूर्यनारायणरेड्डि | 20 |
| बालविनोदिनी | 22 |


मुखचित्रम् - श्रीपद्मावतीदेवी।

अन्तिमरक्षापुटः- श्रीकरिमाणिक्यस्वामिनः पवित्रोत्सवः, नगरी।


## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.

दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९
सम्पादकः,
०८७७ - २२६४३६०

सूचनानाम्, आक्षेपाणां च कृते सम्पर्कं कुर्वन्तु -

sapthagiri.helpdesk@tirumala.org



एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-


वेङ्कटाद्रिसमं स्थानं
ब्रह्माण्डे नास्ति किञ्चन ।
वेङ्कटेशसमो देवो
न भूतो न भविष्यति ॥


तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका




डा.एम्.ईश्वरम्मा
चरवाणी - ८१०६५७८२५०

# तिरुचानूरु पद्मसरोवर वैशिष्ट्यम्



अनादिकालात् भारतीयैः आध्यात्मिक जीवनाय प्रमुखं स्थानं दत्तम्। भक्तैः व्रत, पर्व, तीर्थ, स्नान, पुण्यक्षेत्रदर्शनादीनि पुण्यकार्याणि भक्तिपारवश्यतया प्रवर्त्यन्ते। आलयरहितप्रदेशे निवासः न कार्यः इति दृष्ट्या पुरा चक्रवर्तिभिः भगवदालयाः तीर्थानि च भक्तसौकर्यार्थं निर्मितानि।

आलयः देवालयः इति भगद्विग्रहार्थं निर्मितः पुण्यप्रदेशः। अत्र दैवविग्रहाः स्वयम्भूविग्रहाः, अथवा मुनिप्रतिष्ठिताः स्युः कदाचित् राज्यपालकैः वा प्रतिष्ठिताः स्युः। देश कालपरिस्थितीनां परिणामेपि अद्यापि केषुचिदालयेषु नित्य, वार, मास, अयन, संवत्सरोत्सवाः प्रचलन्ति। एतादृशालयाः दक्षिणभारतदेशे असंख्याकाः वर्तन्ते। आन्ध्रराष्ट्रेऽपि नित्योत्सवदेवालयान् बहून् पश्यामः। एतेषु देवालयेषु तिरुमलवेङ्कटेश्वरालयः, तिरुचानूरुपद्मावती देवालयश्च सुप्रसिद्धौ अत्र देवालयस्य अत्युन्नतगोपुरं अन्ते वा परिसरप्रान्ते वा जलाशयश्च संदृश्येते। एतज्जलाशयान् आगमशास्त्राणि पुष्करिणीति सरोवरं, तीर्थमिति व्यवहरन्ति।

तिरुमलजलाशयस्य तु स्वामिपुष्करिणीति, तिरुचानूरुपद्मावतीमातुः जलाशयस्य सरोवरमिति व्यवहारः वर्तते। जलाशये पद्मानामसंख्याकतया, पद्मावतीदेव्याः जलाशयादाविर्भावाच्च तिरुचानूरुसरोवरस्य पद्मसरोवरमिति नाम आगतं स्यात् पद्मपुराणे महामहिमान्वितमेतत्सरोवरमिति सुस्पष्टं वर्णितम्।

दक्षिणभारतदेशे वैष्णवक्षेत्रे पुष्करिणीशब्दस्य प्राचुर्यं पश्यामः। श्रीरङ्गपुष्करिण्याः चन्द्रपुष्करिणीति नाम। कुम्भकोणस्य शार्ङ्गपाण्यालयपुष्करिण्यां हेमपुष्करिणीति नाम। देव्याः प्राधान्यपुष्करिण्याः अनिरुद्धतीर्थं, साम्बतीर्थं सङ्कर्षणतीर्थमिति नामानि सन्ति। तिरुमलतिरुपतिस्थानां वराहतीर्थम्, स्वामिपुष्करिणी, कपिलतीर्थम् पञ्चमीतीर्थं पद्मसरोवरमिति नामानि।

कार्तिकमासे पद्मावतीदेव्याः ब्रह्मोत्सवानन्तरं चक्रस्वाम्यवगाहसमये अर्थात् पञ्चमीतिथौ भक्ताः वारत्रयं सरोवरे निमज्जनमाचरन्ति अतः पञ्चमीतीर्थमिति प्रसिद्धिरागता। अन्यत्र कुत्रापि तिथिनाम्ना सह तीर्थसंयोगः नास्ति।

पद्मसरोवरं कदा प्रादुर्भूतमिति प्रामाणिकाधाराणि न सन्ति। परन्तु पद्मपुराणे एतत्सरोवरप्रसक्तिर्दृश्यते। अस्य सरोवरस्य समीपे पद्मवतीदेव्याः आलयत्वात् व्यवहारे पद्मसरोवरं नाम रूढं बभूव।

आन्ध्रभाषायां तरिगोण्डवेङ्गमाम्बा स्वकृतवेङ्कटाचलमाहात्म्ये षष्ठाश्वासे १८४५ पद्ये पद्मसरोवरं वर्णितवती। पद्मपुराणे वेङ्कटाचलमाहात्म्ये पद्मसरोवरतीर्थदिव्यारामवर्णनम् -

ददर्श सरस्यस्य तीरे त्वभिवनं वनम्।
पुन्नागनागपनसापाटलाशोककिंशुकैः।।
कुन्दमल्लिकयोपेतं कुशकाशप्रकाशितम्।
विश्वामित्रैः पवित्रैश्चमुञ्जैरप्यभिविजृम्भितम्।।
- वे-मा ७७-८२

**पद्मसरोवरवर्णनम्** - पद्मपुराणे

प्रसन्नं सन्मन इव वैडूर्यविमलोदकम्।
उत्फुल्लैः पुण्डरीकैश्च कल्हारैः कनकाम्बुजैः।।
नीलोत्पलैः कुवलयैः रक्ताब्जैरञ्जितान्तरम्।
मकरन्दमदोन्मत्तमधुरालिकुलोज्ज्वलम्।।

**कारण्डवैः कलरवैः वाचालितदिगन्तरम्।**
**भ्रमत्भ्रमरवृन्दैश्च मधुपानमदोद्धतैः।।**
**गृहीतग्राहदुर्ग्राहचलमानसुमीनकम्।**
**वराहसङ्घैरभितोग्रस्तमुस्तैरलङ्कृतम्।।**
**मेदोन्मत्तैर्वनचरैः वयोभिरभितोवृतम्।**
**तपस्यत्तापक्लेशहरणं रमणं हरेः।।**

अद्य अलघुसोपानान्वितमत्र, दर्शनीयं भवति। भक्तसौकर्यार्थं ति.ति.दे. ब्रह्मोत्सवानां आरम्भसमयात्पूर्वं सरः शुभ्रं कृत्वा शुद्धं जलपूर्णं करोति। अन्यत्र सरोवरेषु, विद्यमानाः कूपाः अत्र, न दृश्यन्ते। अत्रापि कूपस्थाने नीराळमण्डपं दृश्यते। पद्मसरोवरप्रख्यातिमधिकृत्य द्वे कथे वर्तेते। आद्या कथा शंखमहाराजवृत्तान्तसम्बन्धिनी। काम्भोजदेशस्य राजा शङ्खणः विश्वस्तेभ्य वञ्चितः राज्यभ्रष्टः अटव्यां सञ्चरन् दुर्भरदारिद्र्यजीवनात् मरणमेव श्रेयः इति मन्वानः आसीत्। तदा तस्य भार्या दैवं प्रार्थितवती। अकस्मात् दृष्टा योगिनः योगशक्त्या ''एतौ राजदम्पती दुष्टग्रहचारात् राज्यभ्रष्टावास्तमिति'' ज्ञात्वा तयोः उपदिश्य ततः भगवदनुग्रहात् पुनः राज्यप्राप्तिः भवेदित्युक्त्वा अन्तर्हिताः। ततः राजदम्पती काञ्चीश्रीरङ्गक्षेत्रे दैवदर्शनं कृत्वा ततः वेङ्कटाचलं प्राप्तौ। ततः कश्चिन्महानुभावः विश्रान्तं शङ्खणं समीप्य तिरुचानूरुपद्मसरोवरमाहात्म्यं विशदीकृत्य तत्र स्नानात् पापक्षयः स्यादिति प्रोवाच। राजदम्पती स्नानान्तरं पद्मवतीदर्शनभाग्यं प्राप्य सरोवरसमीपे नित्यध्यानात् श्रीनिवासः तयोः प्रत्यक्षीभूय पुनः राज्यप्राप्तिः स्यादिति आशीर्ददौ। राजा पत्न्या सह स्वदेशमागत्य शत्रून् पराजित्य पुनः राजा बभूव। अनया कथया पद्मसरोवरस्नानं, पद्मावती दर्शनं भक्तेभ्यः अभीष्टफलं दास्यतीति सर्वेभ्यः सुस्पष्टं ज्ञातमासीत्।

द्वीतीयकथा - तरिगोण्डवेङ्गमाम्बया वेङ्कटाचलमाहात्म्ये पद्मपुराणमनुसृत्य वर्णितकथा -

श्रीनिवासः यद्यपि पद्मावत्या सह गृहस्थधर्ममाचरन्नपि लक्ष्मीदेव्याः द्रोहः कृतः इति मानसिकबाधामनुभवतिस्म। पद्मावती श्रीनिवासस्य आवेदनां ज्ञात्वा आत्मना सह लक्ष्मीदेवी द्वितीयपत्नीत्वेन स्थातुमङ्गीकृतवती। श्रीनिवासः कोल्हापुरं लक्ष्म्यर्थं जगाम। सा लक्ष्मीः कोल्हापुरात् कपिलाश्रममाजगाम। श्रीनिवासः कोल्हापुरे अदृष्टायां लक्ष्म्यां अगस्त्यार्चित लक्ष्मीविग्रहमर्चयन् दशवत्सराणि तत्रैव यापितवान्। तदा आकाशवाणी - ''कृष्णानद्याः विंशतियोजनानन्तरं सुवर्णमुखरीदर्शनं स्यात्। तस्मात् समीपस्थसरःस्थानात् स्वर्लोकादेकं पद्ममानीय तत्पद्मनित्यविकासाय सूर्यनारायणविग्रहं संस्थाप्य तापसः भूत्वा ध्याननिमग्नश्चेत् कियत्कालानन्तरं लक्ष्मीदर्शनं स्यादिति'' प्रोक्तवती। श्रीनिवासः तथैव कृत्वा लक्ष्मीमन्त्रं जपन्नासीत्। कपिलमुन्याश्रमस्था लक्ष्मीः श्रीनिवासस्य, श्रमं ज्ञात्वा कपिलमुनिं आत्मकथां विज्ञापयामास। सः मुनिः लक्ष्मीं ''अत्र तवैव दोषः दृश्यते''। भृगुमहर्षिः, त्रिमूर्तिषु नारायणः एव श्रेष्ठः गुणाधिकः इति निरूपयितुं तव पत्युः वक्षस्थले पादाहतिश्चकार परन्तु त्वं पतिं निन्दितवती। तथापि श्रीनिवासः त्वदनुग्रहार्थं तापसः बभूव। आलस्येन विना पतिं प्राप्नुहीत्युपदिदेश। ततः पश्चात्तप्ता लक्ष्मीः पद्मसरोवरे पद्मे साक्षात्कृतवती। लक्ष्मीसाक्षात्कारदिनम् - कार्तिकमासः - शुद्धपञ्चमी, शुक्रवारम् - उत्तराषाढनक्षत्रम् श्रीनिवासं प्रति तत्समये सर्वदेवप्रार्थनया, शुभमुहूर्ते लक्ष्मीः श्रीनिवासं प्राप्तवतीति वेङ्गमाम्बा वर्णितवती। तस्मिन् सन्दर्भे नारद वसिष्ठात्रि-अङ्गिरस पुलस्त्य पुलहाः पृथक् पृथक् पद्मसरोवरमाहात्म्यं कीर्तयामासुः।

पद्मपुराणम् - ६-१८९

ततः वेङ्गमाम्बा आलयनिर्माणमेव वर्णितवती ६-१८९

पद्मतीर्थस्य आग्नेयभागे दिव्यालयः विश्वकर्मणा निर्मितः। प्रार्थनया वीरलक्ष्मी तत्र आनीय सकलोत्सवैः आलये स्थापयित्वा पाञ्चरात्रोक्तप्रकारं छायाशुकेन सर्वोपचारापूजाः कारिताः।

एवं सुप्रख्यातपद्मसरोवरे प्रवर्तमानोत्सवेषु ''तेप्पोत्सवः एकः। एते उत्सवाः पञ्चदिनपर्यन्तं प्रवर्तन्ते। प्रथमदिने कृष्णस्वामिने, द्वितीयदिने सुन्दरराजस्वामिने पश्चात्त्रिषु दिनेषु पद्मावत्यै वैभवोपेततया ज्येष्ठमासकृष्णपक्षे-चित्ताविशाखास्वाति अनुराधानक्षत्रेषु निर्वाह्यमाणाः उत्सवाः सर्वे दर्शनीयाः सुमनोहराः भवन्ति।

अस्मिन् वर्षे पद्मावतीब्रह्मोत्सवान् २८.१०.२०२४ आरभ्य ०६.११.२०२४ पर्यन्तं निर्वहिष्यन्ति। अन्तिमदिनोत्सवः पञ्चमी दिनोत्सवः। ति.ति.देवस्थान शासनेषु साधुसुब्रह्मण्यशास्त्रिमहोदयैः ६ संपुटात्मना परिष्कृतेषु एते विषयाः लभ्यन्ते।

**।।वन्दे पद्मावतीं देवीं भक्ताभीष्टवरप्रदाम्।।**





# नागचविति

- डा.जि.चन्द्रशेखर्
चरवाणी - ९४९१७९४५०६

हिन्दूनां पर्वेषु नागचविति नागपञ्चमी इति द्वयोः प्रमुख स्थानं वर्तते। नागदेवतापूजया आयुरारोग्यसन्तानप्राप्तिः भवेदिति विश्वासः। एतत्पर्वदिने गृहशुचीकरणं, शिरस्स्नानं, भूमौ कुड्येषु हरिद्रया नागदेवताचित्राणि रङ्गवल्लीभिः चित्रीकुर्वन्ति। शक्तिमनुसृत्य सुवर्णरजतताम्रादीनि उपयुज्य नागप्रतिमाः निर्मीय पूजयन्ति। तिलमिश्रितपदार्थैः नैवेद्यं समर्प्य प्रतिमायाः क्षीराभिषेकं कुर्वन्ति। सर्पयीतिपरिहारार्थं स्त्रियः उपवासनियमेन षोडशोपचारान् कुर्वन्ति। बन्धुमित्राण्याहूय भोजनं समर्पयन्ति स्त्रियः सोदरेभ्यः स्वबालबलिकानाञ्च नूतनवस्त्राणि ददति।

शेषशायी विष्णुः निद्रावस्थायां लक्ष्मीदेव्याः रक्षणार्थं आदिशेषं नियुयोजेति वदन्ति। श्रीरामोऽपि शेषांशं लक्ष्मणं सीतारक्षणार्थं नियुज्य स्वर्णहरिणानयनाय ययाविति वदन्ति। अत एव निधिनिक्षेपरक्षणार्थं सर्पाः एव महात्मभिः निक्षिप्यन्ते इति वयं पुराणेभ्यः जानीमः।

निष्कामी नागेन्द्रः देवादिदेवः सर्परूपेण भूभारं वहन् विष्णोः शय्यात्वेन शिवस्य कण्ठाभरणत्वेन विनायकस्य उदरपाशत्वेन वर्तते। केषुचित् स्थलेषु सर्परूपसुब्रह्मण्य स्वामिनं आराधयन्ति। आदिशेषः एव कृष्णावतारे बलरामः, रामावतारे लक्ष्मणः कलियुगे शेषाद्रिरिति, भविष्योत्तरपुराणे प्रोक्तम्। शेषमुखमेव वेङ्कटगिरिः, शरीरमध्यमः अहोबिलनृसिंह क्षेत्रं, पुच्छभागः श्रीशैलमिति वदन्ति । पदकवितापितामहः अन्नमय्यापि स्वकीर्तने पदिवेलशेषुल पडगलमयमिति गायति।

वर्षे वर्षे मागचवितिपर्वं कार्तीकमासे शुक्लपक्षचवितितिथौ निर्वहन्ति।केषुचित्प्रान्तेषु श्रावणशुद्ध चवितिं नागचतुर्थीति अनन्तर पञ्चमी नागपञ्चमीति निर्वहन्ति। स्कान्दपुराणे शिव एव पूजाविधानमधिकृत्य पार्वतीं प्रोक्तवानिति दृश्यते।

नागचवितिदिने द्वारयोः पार्श्वे गोमयेन सर्पचित्रनिर्माणं, चतुर्थ्यां उपवासः, पञ्चम्यां सुवर्णेन वा रजतेन वा मृदा वा पञ्चमुख सर्पः निर्मेयः। हरिद्राचन्दनेनापि सर्पाकारः निर्मेयः भक्तिश्रद्धाभ्यां पञ्चमीतिथौ क्षीरपायसान्नं नैवेद्यं समर्पणीयम्। एतद्दिनद्वये हलेन भूकर्षणं, भूरन्ध्रपूरणं न कर्तव्यम्। इदं सर्वं पार्वत्यै शिवप्रोक्तमेव।

नागचवितिदिने वल्मीकसकाशं गत्वा षोडशोपचारैः अष्टोत्तरशतवारं सर्पनामान्युच्चार्य वल्मीके क्षीरं समर्प्य नैवेद्यं देयम्। तिलगुडमिश्रित तण्डुलचूर्णं नैवेद्येन समर्पणीयम्। चवितिदिने उपवासः अवश्यमाचरणीयः नागपूजया शिवकेशवानुग्रहेण साकं बहुसत्फलितानि लभ्यन्ते।सन्तत्यर्थं शिवालये अश्वत्थनिम्ब वृक्षान् संस्थाप्य नागप्रतिष्ठा कर्तव्या (सर्पाराधनया नयनकर्णचर्मव्याधिनाश, सन्तानाभिवृद्धयः स्युरिति भविष्योत्तरपुराणवचनम्।) अस्मिन् वर्षे नवम्बर् पञ्चमदिनाङ्के मङ्गलवारे नागचवितिपर्वं निर्वहणीयमिति ज्योतिष्कनिर्णयः। भारते तेलङ्गाणा, आन्ध्रमहाराष्ट्र ओरिस्सादि राष्ट्रेषु सम्यगिदं पर्वं भक्तिश्रद्धाभ्यां निर्वहन्ति।

नागचविति दिने क्षीरसागरमन्थनकाले वासुकिसर्प मुखवमनविषं शिवः पीत्वा जगन्मङ्गलकार्यं कृतवानिति इदं पर्व निर्वहन्तीति एका कथा।

आदिशेषः ब्रह्माण्डभारं वहति। विष्णुं शय्यारूपेण सेवते। राहुकेतु मध्यग्रहेभ्यः सर्पदोषः आगच्छति इति तन्निवारणाय नागप्रतिमापूजा सम्पूर्णफलदायिकेति तत्पूजामाचरन्ति।

कुण्डलिनीशक्तिः - सर्पः कुण्डलिनीशक्तिप्रतीकः। मानवशरीरे मूलाधारचक्रे कुण्डलिनी शक्तिः विराजते। इमां शक्तिं जागृतां चेत् विभिन्न सिद्धयः लभ्यन्ते। षट्चक्रेषु प्रथमः मूलाधारः। अयं गुदासमीपे वर्तते। मूलाधारात् सहस्रधारापर्यन्तं यात्रा करणात् आध्यात्मिकशक्तिः उपलभ्यते। नागोपासनया कुण्डलिनीशक्तिं जागृतां कर्तुं विद्यमानमार्गः प्रशस्तः। नागचतुर्थीदिने सर्पसूक्तपठनात् पितृदोषः परिह्रियते।

**सर्पसूक्तम् -**

१. ब्रह्मलोकेषु ये सर्पाः शेषनाग पुरोगमाः।
नमोस्तु तेभ्यः सर्पेभ्यः सुप्रीतो मम सर्वदा।।
२. इन्द्रलोकेषु ये सर्पाःवासुकिप्रमुखाद्याः।
नमोस्तु तेभ्यः सर्पेभ्यः सुप्रीतो मम सर्वदा।।
३. कद्रवेयश्च ये सर्पाः मातृभक्तिपरायाणाः।
नमो स्तुतेभ्यः सर्पेभ्यः सुप्रीतो मम सर्वदा।।
४.इन्द्रलोकेषु ये सर्पाः तक्षकप्रमुखाद्याः।
नमोस्तु तेभ्यः सर्पेभ्यः सुप्रीतो मम सर्वदा।।
५. सत्यलोकेषु ये सर्पाः वासुकिना च रक्षिताः।
नमोस्तु तेभ्यः सर्पेभ्यः सुप्रीतो मम सर्वदा।।
६. मलयेचैव ये सर्पाः कर्कोटप्रमुखाद्याः।
नमस्तुतेभ्यः सर्पेभ्यः सुप्रीतो मम सर्वदा।।
७. पृथिव्याञ्चैव ये सर्पाः ये साकेतवासिताः।
नमोस्तु तेभ्यः सर्पेभ्यः सुप्रीतो मम सर्वदा।
८.सर्वग्रामेषु ये सर्पाः वसन्ति च सञ्चिताः।
नमोस्तु तेभ्यः सर्पेभ्यः सुप्रीतो मम सर्वदा।।
९. ग्रामे वा यदिवारण्ये ये सर्पाः प्रचरन्ति।
नमोस्तु तेभ्यः सर्पेभ्यः सुप्रीतो मम सर्वदा।।



१०. समुद्रतीरे ये सर्पाः सर्पाञ्जलवासिनः।
नमोस्तु तेभ्यः सर्पेभ्यः सुप्रीतो मम सर्वदा।।
११. रसातलेषु ये सर्पाः अनन्तादिमहाबलाः।
नमोस्तु तेभ्यः सर्पेभ्यः सुप्रीतो मम सर्वदा।।

एवं सर्पसूक्तपठनात् भौतिकाध्यात्मिक प्रयोजनानि लभ्यन्ते। कर्णाटककुक्किसुब्रह्मण्यक्षेत्रदर्शनात् नागशापनिवृत्तिः भवति। तत्र यतः नागप्रतिष्ठा-नाग संस्कारश्च क्रियते।

अतः भक्तजनैः नागचतुर्थीशुभदिने नागपूजा अवश्यं कर्तव्या।

सन्तानस्य सर्पपूजा सम्बन्धः बहुधा दृश्यते। अस्मिन् सन्दर्भे ब्रह्मपुराण कथा एवं वर्तते -

चन्द्रवंशस्थराजा शूरसेनः भार्यया सह बहुवर्षतपश्चरणात् तयोः सर्पः अजायत। किञ्चित्कालानन्तरं सर्पः मानवभाषया उपनयनं कर्तुं प्रर्थयामास। उपनयने निर्वर्तिते पश्चात् विवाहंकर्तुं ऐच्छत्। खड्गं प्रेषयित्वा राजपुत्रिकया विवाहं कारयामासुः। पश्चात् भर्तुगृहमागता सा मम भर्ता सर्पः इति ज्ञात्वापि निर्भयं तेन साहचर्यं चकार। सर्पः राजपुत्रिकया भार्यया कुतो मां दृष्ट्वा विभेषीत्यपुच्छत्। तदा सा, भर्ता दैवसमः। नाहं त्वत्तः बिभेमीत्यवोचत् ततः सर्पः अहं शिवस्य शापात्सर्पमभवमिति प्रोवाच। ततः कदाचित् गौतमीनद्यां भार्यया सह स्नात्वा शापविमुक्तः बभूव इति ब्रह्मपुराण कथा। अस्मिन् वर्षे पञ्चमदिनाङ्के मङ्गलवारे चविति तिथौ नागचवितिपर्वं भक्ताः सकुटुम्बं स्त्रियः वल्मीकरन्ध्रेषु क्षीरं समर्पयन्ति तिलमिश्रितपिण्डिपदार्थादींश्च समर्प्य अन्य पूजाद्रव्यैः सह सर्पपूजां कुर्वन्ति।





तिरुमलतिरुपतिदेवस्थानानि

## तिरुचानूरु
## श्री पद्मावतीदेव्याः ब्रह्मोत्सवः

**27-11-2024 तः 06-12-2024 पर्यन्तम्**

| दिनाङ्कः | वासरः | प्रातः उत्सवः | रात्रौ उत्सवः |
|---|---|---|---|
| 27-11-2024 | सौम्यवासरः | -- | अङ्कुरार्पणम् |
| 28-11-2024 | बृहस्पतिवासरः | ध्वजारोहणम् | लघुशेषवाहनम् |
| 29-11-2024 | भृगुवासरः | महाशेषवाहनम् | हंसवाहनम् |
| 30-11-2024 | मन्दवासरः | मौक्तिकमण्डपम् | सिंहवाहनम् |
| 01-12-2024 | भानुवासरः | कल्पवृक्षवाहनम् | हनुमद्वाहनम् |
| 02-12-2024 | इन्दुवासरः | पल्लक्युत्सवः सायं-वसन्तोत्सवः | गजवाहनम् |
| 03-12-2024 | भौमवासरः | सर्वभूपालवाहनम्, स्वर्णरथोत्सवः | गरुडवाहनम् |
| 04-12-2024 | सौम्यवासरः | सूर्यप्रभवाहनम् | चन्द्रप्रभवाहनम् |
| 05-12-2024 | बृहस्पतिवासरः | रथोत्सवः | अश्ववाहनम् |
| 06-12-2024 | भृगुवासरः | चक्रस्नानम्, पञ्चमीतीर्थं | ध्वजावरोहणम् |

कार्तिकमास सन्दर्भे शिवपूजाविधानम् -

सप्तगिरि पाठकेभ्यः -.... मासेषु कार्तिकमासः सर्वमासाधिकमहत्त्व विशिष्टः इति शास्त्रकार वचनम्। कार्तिकमासे प्रत्यहं पवित्रताविशिष्टं सत् श्रेष्ठं भवति। तत्रापि सोमवारं महाशिव प्रीतिकरम्। कार्तिकसोमवारे क्रियमाण शिवपूजा अत्युत्तमफल प्रदायिनी। अस्मिन् मासे गृहे गृहे इष्टदेवताराधनया सह शिव पूजामाचर्य परमेश्वरकरुणां यावत्कुटम्ब प्राप्नोतु इत्याकाङ्क्ष्यते।

आचम्य - केशवादिनामभिः आचमनं कर्तव्यम्)
प्राणायामः आचरणीयः

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये।।
वक्रतुण्डमहाकाय सूर्यकोटिसमप्रभ।
निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा।।

श्रीमहाविष्णोराज्ञया प्रवर्तमानस्य आद्यब्रह्मणः द्वितीयपरार्धे श्वेतवराहकल्पे वैवस्वतमन्वन्तरे कलियुगे प्रथमपादे जम्बूद्वीपे भरतवर्षे भरतखण्डे मेरोः दक्षिणादिग्भागे श्रीशैलस्य ....... प्रदेशे गङ्गाकावेर्योः मध्यप्रदेशे समस्तदेवता ब्राह्मण हरिहर गुरुचरणसन्निधौ अस्मिन् वर्तमान व्यावहारिक चान्द्रमानेन..... नामसंवत्सरे....... अयने ऋतौ...... मासे ...... पक्षे शुभतिथौ ...... वारे शुभनक्षत्रे शुभयोग शुभकरण एवङ्गुणविशेषणविशिष्टायां शुभतिथौ..... वारे शुभनक्षत्रे शुभयोग शुभकरण एवङ्गुण विशेषण विशिष्टायां शुभतिथौ श्रीमान्... नामधेयः श्रीमतः ....गोत्रस्य नाम धेयस्य धर्मपत्नी समेतस्य मम उपात्त समस्त दुरित क्षय द्वारा साम्बसदाशिवमुद्दिश्य साम्बसदाशिवप्रीत्यर्थं अस्माकं सह कुटुम्बानां क्षेमस्थैर्य धैर्यविजय आयुरारोग्याभिवृद्ध्यर्थं समस्तसन्मङ्गलावाप्त्यर्थं कल्पोक्तप्रकारेण शिवपूजां करिष्ये -

गणेशस्मरणम् -

गजाननं भूतगणादिसेवितं
कपित्थजम्बूफल चारुभक्षणम्।
हिरण्यकुण्डलं वन्दे कुमारं पुष्करस्रजम्।



# श्रीशिवपूजाविधानम्

लक्ष्मीनारायणस्मरणम् -

यज्ञेश अच्युत गोविन्द माधव अनन्तकेशव कृष्णविष्णो हृषीकेश वासुदेव नमोऽस्तुते।
सिद्धलक्ष्मीः मोक्षलक्ष्मीः जयलक्ष्मीः सरस्वती
श्रीलक्ष्मीर्वरलक्ष्मी च प्रसन्ना मम सर्वदा।।

नन्दिस्तुतिः -

नन्दिकेश महाभाग शिवध्यानपरायण।
महादेवस्य पूजार्थं अनुज्ञां दातुमर्हसि।।

वीरभद्रस्मरणम् -

वीरभद्र! नमस्तेस्तु शिवाज्ञानुप्रवर्तक।
दक्षाध्वर ध्वंसकाय भद्ररूपाय ते नमः।।

श्री उमामहेश्वराभ्यां नमः
श्री लक्ष्मी नारायणाभ्यां नमः
श्रीवाणीहिरण्यगर्भाभ्यां नमः
श्रीशचीपुरन्दराभ्यां नमः
श्री अरुन्धती वसिष्ठाभ्यां नमः

श्री सीतारामाभ्यां नमः
सर्वेभ्यो महाजनेभ्यो नमः
ध्यायामि -

> शङ्करं शम्भुं नीलग्रीवं त्रिलोचनम्
> गङ्गाधरमुमाकान्तं नित्यकल्याणरूपिणम्
> गोक्षीरधवलाकारं चन्द्रबिम्बसमानम्
> भस्मभूषितसर्वाङ्गं रुद्राक्षाभरणान्वितम्।

साम्बसदाशिवं ध्यायामि
आवाहयामि देवेशमादिमध्यान्तवर्जितम्
आधारं सर्वलोकानां आश्रितार्तिविनाशनम्
साम्बसदाशिवं आवाहयामि
आसनं गृह्यतामीश निर्मलं स्वर्णनिर्मितम्
आधारं सर्वजगतामन्धकासुरसूदन
साम्बसदाशिवाय नमः।
आसनं समर्पयामि
पाद्यं गृहण भगवन् पावनं परमेश्वर
पार्वतीहृदयानन्द! पापं सर्वं व्यपोहय।
....साम्बसदाशिवाय नमः पाद्यं समर्पयामि
अर्घ्यं गृहण गिरिश गन्धपुष्पाक्षतैर्युतम्
अधमज्ञानमखिलं नीलकण्ठ निवारय।।
साम्बसदाशिवाय नमः। अर्घ्यं समर्पयामि गृहाणाचमनार्थाय गङ्गाय सरिदाहृतम् निर्मलं जलभीशान व्याधीन्मे विनिवारय ..... साम्बसदाशिवाय नमः आचमनीयं समर्पयामि
पञ्चामृतं गृहाणेदं पन्नगेश्वरभूषण।
पञ्चवक्त्र नमस्तुभ्यं पञ्चपापानि नाशाय।।
साम्बसदाशिवाय नमः। पञ्चामृतं समर्पयामि गङ्गाक्लिन्न जटाभार सोम सोमार्थ शेखर सह्याजादि सरित्तोयैः स्नानं समर्पयामि अत्र शिवः अभिषेच्यः अभिषेकसमये शिवाय नमः इति नाम स्मरणमूलम्। अनेन नाम्ना सह ईशान ते तत्पुरूष नमो घोराय ते सदा वामदेव नमस्तुभ्यं सद्यो जाताय वै नमः। इति श्लोकं नमश्शङ्कराय नम श्शम्भवे नम शिवाय नमो भगवते रुद्राय'' नमशिवाय साम्बाय शान्ताय परमात्मने इति वाक्यानि पठनीयानि। शिवलिङ्गाभावे जने बिल्वदलस्य मज्ञनं कृत्वा तेनैव दलेन अभिषेक भावनां कृत्वा शिवस्य चित्रपटे जलं सिञ्चन् स्नानसेवा कर्तव्या।
गजचर्मधरानन्त गरलाङ्कितकन्धर।
दुकूलं गृह्यतां देव दुर्गीतिं मे निवारय।।
साम्बसदाशिवाय नमः वस्त्रं समर्पयामि।
उपवीतं गृहाणेश पवित्रं परमं शुभम्।
उमाकान्त नमस्तुभ्यं उत्तमं देहि मे फलम्।
साम्बसदाशिवाय नमः उपवीतं समर्पयामि।
कुण्डलाङ्गदमुख्यानि कुण्डलीश्वर भूषण। भूषणानि गृहाणेश भूति भूषितविग्रह। साम्बसदाशिवाय नमः। आभरणानि समर्पयामि। गन्धं कुङ्कुमयुक्तं मृगनाभि समन्वितम्। महादेव गृहाणेश महापापविनाशन। सम्बसदाशिवाय नमः गन्धं समर्पयामि।
अक्षतानक्षतविभो नक्षत्रेश विभूषण शुद्ध स्फटिकसङ्काश स्वामिन् स्वीकुरु शङ्कर।। साम्बसदाशिवाय नमः अक्षतान् समर्पयामि। मल्लिकाकुन्दमन्दार कमलादीनि शङ्कर। पुष्पाणि बिल्वपत्राणि गृहाण करुणानिधे साम्बसदाशिवाय नमः पुष्पाणि समर्पयामि......

अङ्गपूजा

परमाय नमः पादौ पूजयामि, गुणातीताय नमः गुल्फौ पूजयामि, जन्महीनाय नमः, जानुनी पूजयामि जगत्पते नमः जंघे पूजयामि, उमापतये नमः ऊरू पूजयामि, गिरीशाय नमः, गुह्यं पूजयामि, करकराय नमः कटिं पूजयामि नानारूपाय नमः नाभिं पूजयामि, उत्तमाय नमः उदरं पूजयामि, वामदेवाय नमः, वक्षः पूजयामि बहुरुपाय नमः, बाहू पूजयामि, हराय नमः हस्तौ पूजयामि नीलकण्ठाय नमः कण्ठं पूजयामि पञ्चमुखाय नमः मुखं पूजयामि त्रिनेत्रये नमः नेत्राणि पूजयामि फाल नेत्राय नमः, फालं पूजयामि, श्रुतिगम्याय नमः, श्रोत्रे पूजयामि। कपर्दिने नमः कपर्दं पूजयामि शिवाय नमः शिरः पूजयामि, सर्वेश्वराय नमः सर्वाङ्गाणि पूजयामि।
- शिवाष्टोत्तरशतनामभिः पूजा -
नाम्नः आदौ श्री इति अन्ते नमः इति पठनीयम्।

# शिवाष्टोत्तरशतनामावळिः

ओं शिवाय नमः
ओं महेश्वराय नमः
ओं शम्भवे नमः
ओं पिनाकिने नमः
ओं शशिशेखराय नमः
ओं वामदेवाय नमः
ओं विरूपाक्षाय नमः
ओं कपर्दिने नमः
ओं नीललोहिताय नमः
ओं सूदनाय नमः
ओं गङ्गाधराय नमः
ओं ललाटाक्षाय नमः
ओं कालकालाय नमः
ओं कृपानिधये नमः
ओं भीमाय नमः
ओं परशुहस्ताय नमः
ओं मृगपाणये नमः
ओं भगवते नमः
ओं प्रमथाधिपाय नमः
ओं मृत्युञ्जयाय नमः
ओं सूक्ष्मतनवे नमः
ओं जगद्व्यापिने नमः
ओं जगद्गुरवे नमः
ओं व्योमकेशाय नमः
ओं महासेन जनकाय नमः
ओं चारुविक्रमाय नमः
ओं रुद्राय नमः
ओं भूतपतये नमः
ओं स्थाणवे नमः
ओं भवाय नमः
ओं शर्वाय नमः
ओं त्रिलोकेशाय नमः
ओं शितिकण्ठाय नमः
ओं शिवाप्रियाय नमः
ओं उग्राय नमः
ओं कपालिने नमः

ओं कामारये नमः
ओं अन्धाकासुराय नमः
ओं सामप्रियाय नमः
ओं स्वरमयाय नमः
ओं त्रयीमूर्तये नमः
ओं अनीश्वराय नमः
ओं स्वरजाय नमः
ओं परमात्मने नमः
ओं सोमसूर्याग्निलोचनाय नमः
ओं अजाय नमः
ओं पाशविमोचनाय नमः
ओं मृडाय नमः
ओं पशुपतये नमः
ओं देवाय नमः
ओं महादेवाय नमः
ओं अव्ययाय नमः
ओं हरये नमः
ओं पूषदन्तभिदे नमः
ओं अव्यग्राय नमः
ओं दक्षध्वरहराय नमः
ओं हराय नमः
ओं जटाधराय नमः
ओं कैलासवासिने नमः
ओं कवचिने नमः
ओं कठोराय नमः
ओं त्रिपुरान्तकाय नमः
ओं वृषाङ्काय नमः
ओं वृषभारूढाय नमः
ओं भस्मोध्दूलितविग्रहाय नमः
ओं शङ्कराय नम
ओं शूलपाणये नमः
ओं खट्वाङ्गाय नमः
ओं विष्णुवल्लभाय नमः
ओं शिपिविष्ठाय नमः
ओं अम्बिकानाथाय नमः
ओं श्रीकण्ठाय नमः

ओं भक्तवल्सलाय नमः
ओं हविषे नमः
ओं यज्ञमयाय नमः
ओं सोमाय नमः
ओं पञ्चवक्त्राय नमः
ओं सदाशिवाय नमः
ओं विश्वेश्वराय नमः
ओं वीरभद्राय नमः
ओं गणनाथाय नमः
ओं प्रजापतये नमः
ओं हिरण्यरेतसे नमः
ओं दुर्धर्षाय नमः
ओं गिरीशाय नमः
ओं गिरिशाय नमः
ओं अहिर्बुध्न्याय नमः
ओं दिगम्बराय नमः
ओं अनेकात्मने नमः
ओं अष्टमूर्तये नमः
ओं सात्त्विकाय नमः
ओं शुद्धविग्रहाय नमः
ओं शाश्वताय नमः
ओं खण्डपरशवे नमः
ओं भगनेत्रभिदे नमः
ओं अव्यक्ताय नमः
ओं सहस्राक्षाय नमः
ओं सहस्रपदे नमः
ओं अपवर्गप्रदाय नमः
ओं अनन्ताय नमः
ओं तारकाय नमः
ओं परमेश्वराय नमः
ओं अनघाय नमः
ओं भुजङ्गभूषणाय नमः
ओं भर्गाय नमः
ओं गिरिध्वनिने नमः
ओं गिरिप्रियाय नमः
ओं कृत्तिवाससे नमः
ओं पुरारातये नमः

अत्र बिल्वाष्टके एकैकस्य श्लोकस्य शिवाय नमः इति वदन् बिल्वं समर्पणीयम् -

शर्वाय क्षितिमूर्तये नमः
रुद्राय अग्निमूर्तये नमः
भीमाय आकाशमूर्तये नमः
महादेवाय सोममूर्तये नमः
भवाय जलमूर्तये नमः
उग्राय वायुमूर्तये नमः
पशुपतये यजमानमूर्तये नमः
ईशानाय सूर्यमूर्तये नमः

दशाङ्गं गुग्गुलोपेतं सुगन्धं सुमनोहरं आघ्राय सर्वदेवानां धूपोऽयं प्रतिगृह्यतां सम्बसदाशिवाय नमः। धूपमाघ्रापयामि साज्यं त्रिवर्तिसंयुक्तं वह्निना योजितं मया। गृहाण मङ्गलं दीपं त्रैलोक्यतिमिरापहम्। साम्बसदाशिवाय नमः दीपं समर्पयामि। अन्नं चतुर्विधं सूपफलभक्ष्यसमन्वितं दधिमध्वाज्यसंयुक्तं नैवेद्यं प्रतिगृह्यताम्।। साम्बसदाशिवाय नमः। अमृतमहानैवेद्यं समर्पयामि मध्ये मध्ये पानीयं समर्पयामि। आचमनीयं पूगीफलसमायुक्तं नागवल्लीदलैर्युतं कर्पूरचूर्णसंयुक्त ताम्बूलं प्रतिगृह्यताम्। साम्बसदाशिवाय नमः कर्पूरताम्बूलं समर्पयामि चन्द्रादित्यौ च धरणी च विद्युदग्नित्वमेव च। त्वमेव सर्वज्योतींषि भज नीराजनं प्रभो। साम्बशिवाय नमः आनन्दकर्पूरनीराजनं समर्पयामि।

मन्दारनीलोत्पल कुन्दजातीपुन्नागमल्लीकरवीरपङ्कजैः पुष्पाञ्जलिं बिल्वदलैस्तु देव साम्ब। त्वदंघ्रौ विनिवेशयामि सम्वसदाशिवाय नमः, मन्त्रपुष्पाञ्जलिं समर्पयामि। यानि कानि च पापानि जन्मान्तरकृतानि च तानि तानि विनश्यन्ति प्रदक्षिण पदेपदे।।

साम्बसदाशिवाय नमः, आत्मप्रदक्षिणनमस्कारान् समर्पयामि। महादेव नमस्तेस्तु मन्मथाधार नमोऽस्तु हे अमृतेश नमस्तुभ्यं आश्रितार्थप्रदायिने साम्ब सदाशिवाय नमः नमस्कारान् समर्पयामि त्राहि मां देव देवेश! तरुणेन्दुशिखामणे ईप्सितं देहि मे देव दयाराशे नमोऽस्तुते साम्बसदाशिवाय नमः छत्रचामरनृत्तगीतवाद्यादिसमस्तराजोपचारान् समर्पयामि। पूजान्ते क्षीरान्नप्रदानं करिष्ये-

नमश्शिवाय साम्बाय सर्वपापहराय च।
शिवदेव मया दत्तमिदमर्घ्यं गृहाण भो।।
साम्बसदाशिवाय नमः इदमर्घ्यं इदमर्घ्यं इदमर्घ्यम्।
व्योमकेश नमस्तुभ्यं सोमात्मन् व्योमरूपिणे।
नक्षत्रमालिने देव गृहाणार्घ्यमिदं प्रभो।
साम्बसदाशिवाय नमः, इदमर्घ्यं इदमर्घ्यं, इदमर्घ्यम्। अम्बिकायै नमः। इदमर्घ्यं इदमर्घ्यं इदमर्घ्यम्। सुब्रह्मण्य महाभाग! कार्तिकेय सुरोत्तम। गृहाणार्घ्यमिदं दत्तं सुप्रीतो वरदो भव सुब्रह्मण्याय नमः! इदमर्घ्यं इदमर्घ्यं इदमर्घ्यम्

नन्दिकेश महाभाग शिवध्यान परायण।
गृहाणार्घ्यमिदं दत्तं नन्दिकेश नमोऽस्तु ते।।
नन्दिकेशाय नमः इदमर्घ्यं इदमर्घ्यं इदमर्घ्यं चण्डिकेशाय नमः इदमर्घ्यं इदमर्घ्यं इदमर्घ्यम्। अनया साम्बशिवः प्रीयताम् पूजया अर्घ्यप्रदानेन च सपरिवारः

करचरणकृतं वा कर्मवाक्कायजं वा
श्रवणनयनजं वा मानसं वा अपराधम्।
विहितमविहितं वा सर्वमेतत् क्षमस्व
शिव शिवकरुणाब्धे श्रीमहादेव शम्भो।

- डा सि.रामलक्ष्मी
चरवाणी - ९८८५९४६३३७१

श्री न च रघुनाथाचार्यप्रणीता

# श्रीशेषाद्रीशस्तुतिः

व्याख्याता - डा. कन्दाल लक्ष्मीनारायणः
चरवाणी - ९९८५२३७३५३

## त्वत्पादसान्निध्यमेवमे वाञ्छितम्

(तदनन्तरम्)

श्लो.१८.

अनश्वर वयस्स्फुर त्रिदशवारयोषिद्वृतां
न शक्रपदवीं न च क्षितितलाधिपत्यं वृणे।
स्रवन्मधु सुमाटवी सुरभि शेषशैलोल्लसत् -
सरश्शफरजन्मकृत् भवतु भागधेयं मम।।

ता - स्वामिन्! वेङ्कटेशप्रभो! नित्ययौवनेन विलसन्तीभिः अप्सरोरमणीभिः परिवृताम् भौतिकसुख भूयिष्ठां देवेन्द्रपदवीं प्राप्तुं भवन्तम् अहं न प्रार्थयामि। तथैव भूतले सार्वभौमपदवीम् अधिगन्तुं च नाहं भवन्तम् प्रार्थयामि। किन्तु भवतः अनुग्रहेण सन्ततमधुस्राविभिः कुसुमनिकरैः सुरभिते श्रीशेषशैले विद्यमानेषु सरोवरेषु मत्स्यरूपेणापि जन्म प्राप्तुं येग्यं भाग्यं मम भवतु इति भवन्तं प्रार्थये।।

सु.सौ.व्याख्याः - हे भगवन्! तव सेवा एव सुखम् इति चिन्तयतां त्वद्भक्तानां गृहे कीटजन्म अपि चतुर्मुखपदात् उत्कृष्टम्। अतः तदेव मे भवान् अनुगृह्णातु इति यामुनाचार्याः प्रार्थितवन्तः। तथैव अत्रापि आचार्याः - देवेन्द्रपदवीतः, भूमौ सार्वभौमपदवीतः च भगवत्सन्निधौ श्रीवेङ्कटाचले यत्रकुत्रापि सरोवरे क्षुद्रमत्स्यजन्मापि श्रेष्ठम् एव। तदेव भगवान् प्रसादयतु इति प्रार्थनां कुर्वन्ति।



**अनश्वर......शक्रपदवीम्** : - त्रिदशाः नाम इन्द्रादिदेवाः। देवानां वयसि सर्वदा यौवनाख्या तृतीयादशा वर्तते इति तेषां त्रिदशाः इति नाम। तृतीयो भागः त्रिभाग इति वत्। अत्र त्रिशब्दस्य तृतीयदशा इत्यर्थः। नश्वरम् नाशशीलम् अनश्वरम् नाशरहितम्। नाशो नाम परिणामः तद्रहितम् इत्यर्थः। नश्वरशब्दः तच्छीलर्थे नशधातोः क्वरप्प्रत्ययान्तः। एवं सेर्वषाम् अपि देवानां यौवनं वयः सनातनम् नाशरहितम् इति भावः। तेषां देवानां वारयोषितः वेश्यास्त्रियः रम्भादिकाः अप्सरोवनिताः। ताश्च सदा यौवनवत्यः तादृशैः पुरुषैः सह स्वर्गे लोके सुखानि अनुभवन्त्यः तिष्ठन्ति। तादृशीभिः सुरसुन्दरीभिः परितः समावृतोदेवेन्द्रो यथा विविधान् भोगान् सदा अनुभवति तादृशं भौतिक सुखानुभवम् अहं न अभिलषामि इति तात्पर्यम्।

**क्षितितलाधिपत्यम्** : - "युवा स्यात् साधुयुवाध्यापकः इत्युक्तरीत्या-यःकश्चित् युवा युवजनपरिवृतः दृढगात्रो बलीयान् सुसमृद्धायाः पृथिव्याः अधीशो भवति, तादृशीं सर्वोत्कृष्टां सार्वभौमपदवीम् अपि न काङ्क्षे अहम्।

**स्रवन्मधु... भागधेयं मम** : - परन्तु सर्वेश्वरस्य भवतः कृपया एतादृशं भाग्यं तु मम भवेत् - यत् इति चेत् - स्वामिन्! भवन्निवासः शेषाचले मकरन्दस्राविपुष्पसमृद्धिभिः निर्भरः। एवं सुगन्धभरितानां नानाविध कुसुमानां परिमलैः सुवासितश्च विराजते। तथा परमपवित्रे तस्मिन्नद्रौ विद्यमानेषु सरोवरेषु यत्रकुत्रापि मम मत्स्यजन्मभाग्यं कल्पयतु भवान्। विविधेषु लोकेषु देवेन्द्रादि उत्कृष्टपदवीप्राप्तेः अपेक्षया अतिपावने त्वत्सन्निधौ क्षुद्रम् अपि मत्स्यादिजन्म अत्यन्तं श्रेष्ठम् इति भावः। अतः श्रीनिवासस्य दयया वेङ्कटाचले तदप्यस्तु इति प्रार्थ्यते।

अयं श्लोकः श्रीकुलशेखरळवार् नामक दिव्यसूरिप्रोक्ते पेरुमाळ् तिरुमोळि दिव्यप्रबन्धे स्थितस्य "आनादशेल्वत्त" -१.१.२. इति पाशुर सूक्तेः भावानुवादरूपः इति स्तुतिकारैः आचार्यैः सूचितम्। पृथ्वीवृत्ते, २निबद्धोऽयं श्लोकः। लक्षणं पूर्वत्र उक्तम्।।

(अनुवर्तिष्यते)

## श्री दुर्गाष्टोत्तरशतनामस्तोत्रम्

# दुर्गास्तुतिः



१. ओं दुर्गा शिवा महालक्ष्मीर्महागौरीचण्डिका।
सर्वज्ञा सर्वलोकेशी सर्वकर्मफलप्रदा।।

२. सर्वतीर्थमयीपुण्या देवयोनिरयोनिजा।
भूमिजा निर्गुणाऽधारशक्तिश्चानीश्वरी तया।।

३. निर्गुणा निरहङ्कारा सर्वगर्वविमर्दनी।
सर्वलोकप्रिया वाणी सर्वविद्याधिदेवता।।

४. पार्वती देवमाता च वनीशा विन्ध्यवासिनी।
तेजोवती महामाता कोटिसूर्यसमप्रभा।।

५. देवता वह्निरूपा च सतेजा वर्णरूपिणी।
गुणाश्रया गुणमध्या गुणत्रयविवर्जिता।।

६. कर्मज्ञानप्रदा कान्ता सर्वसंहारकारिणी।
धर्मज्ञा धर्मनिष्ठा च सर्वकर्मविवर्जिता।।

७. कामाक्षी कामसंहर्त्री कामक्रोधविवर्जिता।
शाङ्करी शाम्भवी शान्ता चन्द्रसूर्याग्नि लोचना।।

(अनुवर्तते२२)



# याज्ञवल्क्य जयन्ति

- आचार्य जि.पद्मनाभम्
चरवाणी - ९२४७३२८२८६

कुरुपाञ्चालदेशे गङ्गानदीतीरे "चमत्कार" नामक पुरे सार्थकनामधेयः यज्ञवल्कः नाम ब्राह्मणः आसीत्। सुनन्दायज्ञवल्क्योः दम्पत्योः कार्तिकशुद्धद्वादश्यां भानुवासरे धनुर्लग्ने पुत्रः याज्ञवल्क्यः अजायत। याज्ञवल्क्यः पञ्चमवर्षे अक्षराभ्यासे, अष्टमवर्षे उपनयने समाप्ते पश्चात् भाष्कलात् ऋग्वेदं, जैमिनेः सामवेदं, अरुणेः अथर्वणवेदं अभ्यस्तवान्। अनतिकाले वेदत्रयाध्ययने समाप्ते तुष्टः पिता वैशम्पायनसकाशं पुत्रं प्रेषयामास। याज्ञवल्क्यः वैशम्पायनशिष्यो भूत्वा यजुर्वेदाध्ययनं समाप्य अन्येषु बहुषु शास्त्रविषयेषु शिक्षितः बभूव। ततः विद्यामदाहङ्कारेण अविनीतो भूत्वा कृद्धेन मातुलेन पादप्रहारमवाप। पादप्रहारः ब्रह्महत्यासमः इति मातुलः चिन्तयति स्म। तदा याज्ञवल्क्यः ब्रह्महत्यापातकं अहमेव परिहरिष्यामीति प्रोवाच। तदा शिष्याहङ्कारात् क्रुद्धः वैशम्पायनः मामेव निन्दसे इति मत्तः अभ्यस्तां वेदशास्त्रपाण्डित्यबलां सर्वां विद्यां अत्रैव, वमनं कृत्वा आश्रमं परित्यज्य गछेति कठिनस्वरेण प्रोवाच। याज्ञवल्क्यः गुरुपादपतितः दुखितः शापमोचनाय गुरुं प्रार्थयामासः। ततः स्वतपोबलात् गुरोः ब्रह्महत्यादोषमपि अपनीय गुरोः अधीतवेदान् रुधिररूपेण वमनं कृत्वा दूरं जगाम। भाषणे कृते वमनरक्तं तित्तिरिपक्षिणः चखादुः। तैः पक्षिभिः भाषितानि वचांस्येव उपनिषद्रूपाणि जातानि। अद्य प्रसिद्धतैत्तरीयोषनिषत् इयमेव।

पश्चात् याज्ञवल्क्यः भगवन्तं सूर्यमाराध्य तत्कारुण्यात् शुक्लयजुर्वेदं अभ्यस्य गुरोरधिकः सञ्जातः। पश्चात् सरस्वतीमुपास्य सर्वविद्याः समवाप। एवममानुष विद्यानिधिः अयं कण्वमहर्षेरपि गुरुर्बभूव। एते एव प्रथम काण्वरपखीयाः। कदाचित् जनकमहर्षिः यज्ञार्थं अनेकान्यमहर्षीन्, याज्ञवल्क्यमपि आह्वयामास। यागानन्तरं महर्षीन् सर्वान् सम्बुद्ध्य युष्मासु यः अधिकः सः सर्वधनराशीन् स्वीकृत्य गछतु इति प्रकटीचकार। महर्षिषु यः कोऽपि साहसं न चकार। याज्ञवल्क्यस्तु धनराशीन् स्वीकृत्य गृहं गच्छन्तु इत्यादिदेश शिष्यान्। तदा यागागतमहर्षयः शास्त्रवादे सञ्जाते याज्ञवल्क्येन पराजिताः। महामेधावी शाकल्योऽपि पराजितः। तदा जनकः सर्वाधिकं याज्ञवल्क्यं पूजयित्वा बहूनाध्यात्मिकविषयान् विज्ञातवान्।

ततः किञ्चित्कालानन्तरं गन्धर्वः विश्वावसुरपि याज्ञवल्क्यात् तत्त्वोपदेशं प्राप्य तं सपूज्य ययौ। याज्ञवल्क्यस्य काले कतुरिति ऋषेः कात्यायिनीति सुगुणा सुता आसीत्। याज्ञवल्क्यः कतु प्रार्थनया कात्यायनीं उपयेमे। मित्रनामक ब्राह्मणसुता मैत्रेयी याज्ञवक्यादन्यं पतिं विवाहे नाङ्गीकरिष्यामीति शपथञ्चकार। मैत्रेयी गार्ग्याः शिष्या। गार्गी मैत्रेयीं कात्यायिनीसकाशं प्रेषयामास। मैत्रेयी कात्यायिन्याः सखी बभूव उभयोः परस्परानुरागे जाते गार्गी मैत्रेयी शपथं कात्यायिन्या स्पष्टीचकार। कात्यायनी च स्वपतेः मैत्रय्यासाकं विवाहं कारयामास। याज्ञवल्क्यः पत्नीद्वयेन सानन्दं कालं यापयामास। कात्यायिनी याज्ञवल्क्यात् चन्द्रकान्तः महामेघः विजयः इति पुत्रत्रयं सुषुवे।



सर्वे ऋषयः माघशुद्धपूर्णिमायां योगीन्द्रपट्टाभिषेकं बिरुदं याज्ञवल्क्याय ददुः। याज्ञवल्क्येन ऋषिभ्यः बोधिताः एव सर्व विषयाः योगयाज्ञवल्क्यनाम्ना प्रसिद्धिं मताः। याज्ञवल्क्यः भार्याभ्यः महत्तत्त्वमुपदिश्य पश्चात् सन्यस्तः बभूव। भार्ययोः याज्ञवल्क्यस्य उपदेशः-

**याज्ञवल्क्यस्य उपदेशः -** भार्या मैत्रेयी कात्यनी च ऐश्वर्यं आवयोः मास्तु अजरामरमोक्षमार्गमुपदिश इति पृष्टवत्यौ। तदा तस्य : -

**उपदेशः -** भर्ता भार्यायाः प्रियः न आत्मनः एव प्रियः। एवं पुत्रमित्रादीनां न प्रियः, आत्मप्रयोजनायैव प्रियः, अतः आत्मा द्रष्टव्यः श्रोतव्यः, मन्तव्यः ध्यातव्यः। आत्मज्ञाने समस्त ज्ञानं भवति। अद्वितीयपरमात्मैव सकलस्यापि कारणः। वेदशास्त्राणि परमात्मनः निश्वासभूतान्येव।

आत्मा, भूतेभ्यः आविर्भूय विशेषज्ञान विशिष्टः, मरणानन्तरं भेदविषयकसूचनया विना ब्रह्म भवति। अज्ञानात् देहेन्द्रियात्मकजीवभावः, तन्नाशात् तदभावः भवति। विज्ञानघनस्वरूपात्मा नाशरहितः, निराकारः। सङ्गदुःखबाधारहितः अविनाशी। आत्मना एव आत्मा ज्ञातव्यः। एदमेवामृतत्त्वमिति बोधयित्वा भार्याद्वयं संसारसागरतारकं कृत्वा स्वयमपि सन्यस्य देहान्ते भगवल्लीनो बभूव। याज्ञवल्क्येन स्मृतिग्रन्थः एकः लिखितः। तं याज्ञवल्क्य स्मृतिरिति वदन्ति। कर्मज्ञानमोक्षसम्बन्धिनः अनेके विषयाः तत्र लभ्यन्ते। अपि च याज्ञवल्क्यस्मृतै आचार व्यवहार प्रायश्चित्त नाम्ना काण्डत्रयं वर्तते। प्रथमकाण्डे चतुर्दशविद्याः, परिषत्, संस्काराः सपिण्डविवाहाः, स्नातकविधयः, पुरोहितधर्माः वर्तन्ते। द्वितीय काण्डे न्यायस्थानादिकं, शिक्षाधिकं, स्त्रीधन विषयाः वर्तन्ते। तृतीयकाण्डे अपरकर्म, अशौच शुद्धीत्यादयः, यतिधर्माः मोक्षमार्गः, सत्त्वरजस्तमो गुणदोषाः यमनियमाः प्रयश्चित्तादयः वर्तन्ते।

**योगयाज्ञवल्क्यम् -** योगाः योगङ्गानि उपाङ्गानिद्वा दशाध्यायेषु प्रोक्ताः अयं, गर्ग्याकृतयाज्ञवल्क्य सम्भाषणसारः इति द्योत्यते। याज्ञवल्क्यः योगशास्त्रं ब्रह्मसकाशात् ज्ञातोऽस्मीति स्वयं प्रोवाच। गृहस्थोऽपि स्वकर्माण्याचरन् वेदपरिज्ञानात् सम्यगात्मदर्शनात् मुक्तो भवतीति प्रोक्तम् -

स्वकर्मणामनुष्ठानात् सम्यगात्म निदर्शनात्।
वेदान्तानां परिज्ञानात् गृहस्थोऽपि विमुच्यते।।
ज्ञानकर्मसमायोगात् गृहस्थोऽपि विमुच्यते।।
ज्ञानकर्मसमायोगात् परमाप्नोति पूरुषः।
पृथग्भावो न सिद्धयेत उभे तस्मात् समाश्रयेत्।।
सकलपुराणसम्मतमुनिकुलाग्रगण्य।
सरसवचोपन्यासधुरीण। नमो नमस्ते।।



# साधुसङ्गमः सकलार्थसाधकः

- डा.के.कोटेश्वरय्य
चरवाणी - ९९८५९१२३२६२

"देवर्षीणां नारदः" इति गीतायां प्रोक्तः नारदः कदाचित् महात्मनां सन्दर्शनफलं किमिति श्रीकृष्णं पप्रच्छ। तदा कृष्णः नारदं सम्बुद्ध्य हे नारद अस्मात् प्राग्दिशं गच्छ। तत्र मलराशिं पश्य। तत्र एकः कृमिः जीवति, तं तव प्रश्नं पृच्छ। समीचीनं समाधनं सः वक्ष्यतीत्यवोचत्। नारदः मलराशिसकाशं गत्वा महात्मदर्शनफलमपृच्छत्। प्रश्न श्रवणानन्तरमेव सः कृमिः प्राणानत्यजत्। नारदः श्रीकृष्णं समीप्य कृमिवृत्तान्तं यथातथमुवाच। तदा श्रीकृष्णः नारदमुद्दिश्य हे नारद! अद्य त्वं पश्चिमदिशं गच्छ। तत्र शिथिलदेवालये एकः कपोतः वर्तते। तं प्रश्नस्य समाधानं पृच्छ स्व। सः समाधानं वक्ष्यतीत्यवोचत्। नारदः पश्चिमदिशं गत्वा शिथिलदेवालयस्थं कपोतं स्वप्रश्नस्य समाधानम पृच्छत्। सः कपोतः नारदप्रश्नश्रवणादेव झटिति नारदपादयोः पतित्वा पञ्चत्वं गतः। तदा दिग्भ्रान्तः नारदः मम प्रश्नश्रवणात् झटिति प्राणिद्वयं मृतमिति चिन्ताक्रान्तः भगवान् मां परीक्षते इति मत्वा पुनः कृष्णसकाशं गत्वा कपोतमरणवृत्तान्तं निवेदयामास। तदा जगन्नाटकसूत्रधारी कृष्णः ज्ञातोऽपि अज्ञात विषयः इव भाषमानः अद्य उदीचिदिशं गच्छ। तत्र राजसंस्थाने राज्ञः एकः शिशुः सञ्जातः। सद्योजातं तं शिशु पृच्छस्व। सः तव प्रश्नस्य समाधानं वक्ष्यतीत्यवोचत्। नारदः आलोचनानिमग्नः सन् अद्य कृमिकपोतौ मृतौ। बालोऽपि मद्दर्शनात् मृतश्चेत् प्राणित्रयमरणकारकः अहं पापी स्यामिति मन्वानः आसीत्। तदा कृष्णः अद्य भयं मास्तु शुभं भविष्यतीत्यवोचत्। नारदः राजमन्दिरं गत्वा तत्र डोलायां विद्यमानं शिशुं दृष्ट्वा महात्मसाङ्गत्यफलमपृच्छत्। झटित्येव सः शिशुः महातेजस्वी देवतारूपं धृत्वा भक्त्या नारदमेवमुवाच - देवर्षे! अहमादौ मलराशिस्थः कृमिरेव। तव दर्शनभाग्यात् कपोतः सञ्जातः। कपोतजन्मनि तव दर्शनभाग्यात् राजपुत्र जन्म प्राप्तोऽस्मि। अस्मिन् जन्मनि महात्मनः तव दर्शनात् मम दैवत्वं सम्प्राप्तम्। एतत्सर्वं महात्मसन्दर्शनभाग्यफलाद्भुतमेव इति वदन् आकाशमार्गे देवलोकं जगाम। अतः "साधुसङ्गमः सकलार्थ साधकः"। विवेक चूडामणे शङ्कराचार्योऽपि "दुर्लभं त्रयमेवैतत् दैवानुग्रहहेतुकम्। मनुष्यत्वं, मुमुक्षत्वं महापुरुष संश्रयः इत्यवोचत्।

**सर्वैरपि सज्जनसाङ्गत्यमेव कर्तव्यम्**



# शाप एव वरम्

तेलुगुमूलम् - डा.कम्पेल्ल रविचन्द्रन्
चित्राणि - तुम्वलि शिवाजी
संस्कृतानुवादः - डा.सूर्यनारायणरेड्डि
चरवाणी - ८१०६५७८२५०















धौम्यमहर्षिः तत्र आगतः

महर्षेः अभिवन्दनानि

धर्मनन्दन विधिः बलीयः अनुल्लङ्घनीयः। गतस्य विचारेण विना, विजयेन अज्ञातवासः पूरणीयः। अर्जुन कुमार! प्रधानतया पाण्डवधर्मपन्ती पाञ्चालीदेवी जागरूकतया रक्षणीया।

एवं पाण्डवाः विराटनगरसमीपमागताः।















# बालविनोदिनी

प्रदत्तं चित्रपटम् बिन्दुसाहाय्येन पूरयामः वा?

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?





१. बालदिनोत्सवः

२. कार्तिकमासः

३. पद्मावतीदेव्याः ब्रह्मोत्सवः वाहनानि

उचित समाधान सङ्ख्या कोशे लिखन्तु।

मेलनं वा निष्कासनं कृत्वा ११ सङ्ख्या यत्र आगच्छति तस्मिन् मार्गे गच्छति चेत् बालकः, पयोहिमं गन्तुं शक्नोति।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 10 +1 | 18 −2 | 9 −1 | 5 +6 | 23 −12 | 55 −44 | 17 +5 | 28 −5 |
| 12 −1 | 7 +2 | 35 −10 | 35 −24 | 14 −13 | 72 −61 | 50 −38 | 21 −2 |
| 22 −11 | 2 +9 | 10 −2 | 3 +8 | 35 −20 | 26 −15 | 1 +9 | 40 −2 |
| 7 +2 | 4 +7 | 31 −20 | 43 −32 | 12 −12 | 45 −34 | 8 +3 | 0 +11 |

(षोडशपुटात्)

८. सुजया जय भूयिष्ठा जाह्नवी जनपूजिता।
शास्त्री शास्त्रमयी नित्या शुभा चन्द्रार्धमस्तका।।
९. भारती भ्रामरी कल्पा कराळी कृष्णपिङ्गला।
ब्राह्मी नारायणी रौद्री चन्द्रामृतपरिस्रुत।।
१०. ज्येष्ठेन्दिरा महामाया जगत्सृष्ट्यधिकारिणी।
ब्रह्माण्डकोटिसंस्थाना कामिनी कमलालया।।
११. कात्यायनी कालातीता कालसंहारकारिणी।
योगनिष्ठा योगिगम्या योगिध्येया तपस्विनी।।
१२. ज्ञानरूपा निराकारा भक्ताभीष्टफलप्रदा।
भूतात्मिका भूतमाता भूतेशा भूतधारिणी।।
१३. स्वधा नारीमध्यगता षडाधारादिवर्धिनी।
मोहितांशुभवा शुभ्रा सूक्ष्मा माता निरालसा।।
१४. निम्नगा नीलसङ्काशा नित्यान्दा हरा परा।
सर्वज्ञानप्रदाऽनन्दा सत्या दुर्लभरूपिणी।।



सरस्वती सर्वगता सर्वाभिष्टप्रदायिनी



Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.





04-10-2024 तिथ्यारभ्य 12-10-2024 पर्यन्तं प्रवर्तित सालकट्ल ब्रह्मोत्सवेषु श्रीवेङ्कटेश्वरस्वामिनः विविधवाहनेषु अनन्तभक्तकोटिं अनुगृहीतवन्तः। एषु ब्रह्मोत्सवेषु ति.ति.देवस्थानोद्योगिनः भक्तेभ्यः समस्त सौकर्याणि कल्पयामासुः। प्रपञ्चे चतुष्कोणेभ्यः आगतभक्तैः ति.ति.देवस्थान प्रदर्शित विविधकळाबृन्दैः तिरुमलपुण्यक्षेत्रं, गोविन्दनामभिः प्रतिध्वनितम्। एतानि छायाचित्राणि सप्तगिरि पाठकाः पश्यन्तु।






















SAPTHAGIRI (SANSKRIT) SPIRITUAL ILLUSTRATED MONTHLY PUBLISHED BY
TIRUMALA TIRUPATI DEVASTHANAMS PRINTING ON 25-10-2024 & posting at Tirupati
RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal
Regd. No. TRP/154/2024-2026" LICENCED TO POST WITHOUT PREPAYMENT
No.PMGK/RNP/WPP-04(4)/2024-2026" Posting on 5th of every month.

# 15.11.2024 तिथौ नगरी श्रीकरिमाणिक्यस्वामिनः पवित्रोत्सवः